तेषु श्रेष्ठान्यहं वक्ष्ये यद्दृष्टानि कानिचित ॥ न शक्यं विस्तरात् वक्तुं ते सर्वे क्षेत्रवैभ
वं ॥ २६ ॥ मुक्तिक्षेत्रं प्रवक्ष्यामि श्रीकण्ठं जम्बुकेश्वरं ॥ रत्नाद्रिं मातृशेखरं तणज्योति
श्वरं शिवे ॥ २७ ॥ श्रीवांछं चैव मायूरं कुंभेशं तारनायकं ॥ वैद्यनाथं पंचनदं तेजसेशंच
सुन्दरं ॥ मार्कण्डेयेश्वरं चापि क्षीरोपरमनुत्तमम् ॥ छत्रेशं च वल्मीकं वेदारण्यमनु
त्तमं ॥ २८ ॥ दुर्गेशं मंगलांबेशस्थलं पुण्यात्मकं परं । चन्द्रेश्वरं कुद्दालं गोवटं नतपूजितं ॥ ३० ॥
तंत्रेश्वरं महापुण्यं गोकर्णमपि दक्षिणं ॥ आत्मनाथं सुमहत्कन्याचित्रसभेश्वरं ॥ ३१ ॥ दक्षिणां बदरीना
थं धृतीश्वरं ॥ गर्भरक्षापुरीशं च काश्यारण्येश्वरं तथा ॥ ३२ ॥ कालकूटविषादं च दारिरीशं त्र्यंकोटिकं ॥ चक्रेशं
पुण्यकेशं च पित्रेशं माधवेश्वरं ॥ ३३ ॥ प्रत्युन्नतप्रवेशाख्यं कूटजेश्वरमद्भुतं ॥ त्र्यम्बकेशं वृद्धेशं वल्मिकु
चेश्वरमेव च ॥ ३४ ॥ व्याघ्रेशं खण्डिकेशं च वेदमन्नादनेश्वरं ॥ भिक्षाटनेश्वरं क्षेत्रं श्वेतारण्यं मनोहरं ॥ ३५ ॥
छायावनं संगमेशं कुशारण्यमनुत्तमम् ॥ श्री वत्सवत्सलारण्यं वै क्षेत्राण्येतानि शैलजे ॥ ३६ ॥ आसमंता
सह्यजायास्ताम्रपर्ण्यास्तटे शिवे ॥ एवमादीनि पुण्यानि सह्यजा तटयो द्वयोः ॥ ३७ ॥ सह्यसागरयोर्मध्ये

साक्षीनाथं

च ॥१४॥ वरायित्वं महादेव कावेर्यां दक्षिणे तटे ॥ ताम्रपर्ण्यां स्तटं द्धं द्धं वदवन्ते नारा शंकर ॥१५॥
यानि देवि मया तीर्थानि वक्तुं महसि मे विभो ॥ पापघ्नद्या नदाश्चैव भक्तिदाश्च वृषध्वज ॥१६॥
हालास्येशस्य सदनं वेणुनाथं च शुचिकं ॥ पुण्य मुक्तरकोशाक्ष तथा वातपुरं हरं ॥१७॥ गन्धमा
दन शैलेच रामेश्वर मिति स्थितं ॥ पुण्यां शिव धनुष्कोटिं वक्तुं महसि शंकर ॥१८॥ श्री ईश्व
र उवाच ॥ शृणु देवि मम क्षेत्रं कावेरि सेतु मध्यगं ॥ ताम्रपर्णी तटे चापि पुण्य देवनारि सांतमे ॥
॥१९॥ त्रयो विंशति साहस्रं मम देवं च तिष्ठति ॥ विष्णोर्देवं सहस्रं वै पुरातन महीनेषु ॥२०॥
सुब्रह्मण्य महादेवं षट् सहस्र प्रतिष्ठितं ॥ विनायकालयं पंच सहस्रं च प्रकीर्तितं ॥२१॥ का
लीदेव सहस्रं वै तांडवेश स्थलं शतं ॥ त्रिसहस्रं च दुर्गायाः शाक्तदेवा युतं शिवे ॥२२॥ ए
कादश सहस्रं वै क्षुद्र भूतालयं भवेि ॥ एतत्सर्वं महं देवं मधिष्ठाय पुरातनं ॥२३॥ चो
ल पांड्य च भूमिभिर्देवैरपि सुपूजितं ॥ मम देवेषु हीरम्मा त्वया सह महेश्वरि ॥२४॥
वासं करोमि तस्यापि देवेषु च हरे रहं ॥ न विमुञ्चामि तद्देवं कल्पान्तेपि कदाचन ॥२५॥

(दी) पताकाद्यमनोहराः ॥४६॥ देयङ्कर्पूरदीपानाम् नीराजनमनुत्तमम् ॥ पश्चादास्वेदमीशाय प्रणतैर्नर्तनोत्सवैः ॥४७॥ रुद्राध्यायादिमन्त्राणां स्तोत्रैः शां
भवभोजनैः । पुण्यैः शिवकथालापैः कालो नेयः प्रयत्नतः ॥४८॥ एवमासायमीशार्चा कर्तव्या मुक्तिकाङ्क्षिभिः ॥ सायङ्काले विशेषेण पुनः पूजां
समारभेत् ॥४९॥ उक्तेनैव प्रकारेण मोक्षदं निशि पूजनम् ॥ लिङ्गरूपिणमीशानं प्रदोषे यस्तु पश्यति ॥५०॥ सवंशकोटिसंयुक्तः शिवलोकं प्रयास्यति ॥
ब्रह्महत्यादिपापानां प्रलयाय प्रजायते ॥५१॥ शिवार्चनं परमिदम् वेदवेद्यमिति श्रुतम् ॥ प्रदोषकाले सम्प्राप्ते यः शिवं नार्चयिष्यति ॥५२॥ स
(न गमिष्यति) दुर्भगो भवत्येव नरकं यान्ति निश्चयम् ॥ अयमर्थस्तु विज्ञातः कुम्भयोनिमुखान्मया ॥५३॥ तेन वेदैः परिज्ञातः शिवार्चनमहोत्सवः ॥ याज्ञवल्क्य उ-
वाच ॥ इति तद्वचनं श्रुत्वा सा राजमहिषी तदा ॥५४॥ तस्मै प्रणम्य गुरुं मत्वा क्षमस्वेत्यब्रवीन्मुहुः ॥ त्वं गुरुर्मम भाग्येन संसारागारसागरात् ॥५५
संसारात्तारयापेक्षाकटाक्षैः पुण्यपूरितैः ॥ ~~इति तद्वचनं श्रुत्वा~~ ॥ इत्युक्तं तद्वचः श्रुत्वा तां ददर्श स भूपतिः ॥५६॥ स्वसारमिव संसाराद्दूरतः शङ्करः परः
तामुवाच ततो राजा स्वतन्त्रा नासि भामिनि ॥५७॥ इतो याहि गृहं सर्वं समाप्यं चोद्य सत्वरम् ॥ स्त्रीणां पतिव्रतानां तु सर्वथा भर्त्रनुज्ञया ॥५८॥ विना
2
न धर्माचरणं तत्रापि शिवपूजनम् ॥ एकाकिना मया सार्कमत्र सम्भाषणे सति ॥५९॥ विपरीतमतिर्लोके लोकानां तु भविष्यति ॥ न चान्यपुरुषाः सन्ति नाङ्ग-
ना अपि केवलं ॥६०॥ आवयोरिह संस्थानम् अयोग्यमिति मे मतिः ॥ यद्यप्येतासु नारीषु तरुणीष्वपि मे मनः ॥६१॥ संतप्तलोहखण्डत्वबुद्ध्यानैव

उरुप्रदेशे गुल्के च त्रियुं धारयेन्मुहुः ॥ रुद्राक्षधारणं कार्य्यं द्वात्रिंशत्कण्ठमालया ॥ ३० ॥ शिखायामेकरुद्रस्यात् द्विचत्वारिंशदुत्तमाः ॥ रुद्राक्षाः शिरसा
धार्याः कर्णयोर्द्वादश द्वयोः ॥ ३१ ॥ शतत्रयं तूपवीते बाह्वोः षोडश षोडश ॥ चतुर्विंशति रुद्राक्षा द्वयोस्तु मणिबन्धयोः ॥ ३२ ॥ अष्टोत्तरशतै रेव रुद्राक्षैर्जपमालि
का ॥ तयाथ पञ्चाक्षरं जप्त्वा शैवः शिवमवाप्नुयात् ॥ ३३ ॥ त्रिस्त्रिराचमनं स्त्रीणां पुंसामिव यथाविधि ॥ भवाद्यैर्नामभिर्यद्वा शिवपञ्चाक्षरेण वा ॥ ३४ ॥ पश्चा-
त्कुशासने स्थित्वा यद्वा व्याघ्राजिनादिषु ॥ उदङ्मुखः प्राङ्मुखो वा पूजयेद्गिरिजापतिम् ॥ ३५ ॥ पञ्चामृताभिषेकाद्यैः कर्पूरादिसमन्वितैः ॥ जलैः क
लोदकैरीक्षामाम्रादिकरसैरपि ॥ ३६ ॥ शुद्धोदकैः कवोष्णैर्वा शीतलैर्वा मनोहरैः ॥ पश्चाद्दुकूलवसनैः पूजयित्वा सदाशिवम् ॥ ३७ ॥ सुगन्धचन्दनेनापि पूजये
द्गिरिजापतिम् ॥ बिल्वपत्रै रक्षतैश्च प्रफुल्लकुसुमैरपि ॥ ३८ ॥ मन्दारादिप्रसूनानाम् मालिकाभिस्समर्चयेत् ॥ पश्चात् धूपाय धूपैश्च दीपैः कर्पूरसम्भवैः
॥ ३९ ॥ ओदनैराज्यसंयुक्तैः शाकसूपसमन्वितैः ॥ परमान्नैर्घृतयुतैः शर्कराराशिसंयुतैः ॥ ४० ॥ लड्डुकैर्वटकैस्साज्यैरपूपैर्मण्डकादिभिः ॥ भक्ष्यैर्लेह्यैश्च चोष्यै
श्च पेयैश्च विविधैरपि ॥ ४१ ॥ कदलीनारिकेलाद्यै रपारैः फलमण्डलैः ॥ इक्षुदण्डैश्च खण्डैश्च दधिक्षीररसोद्भवैः ॥ ४२ ॥ दध्योदनैश्च क्षीरैश्च दधिपूरैर्मनो
हरैः ॥ सुगन्धजलपूरैश्च नवेक्षुरसपूरकैः ॥ ४३ ॥ द्राक्षाराशिरसै रेलालवङ्गपरिवेष्टितैः ॥ अन्यैरपि रसद्रव्यैः पूजयित्वा महेश्वरम् ॥ ४४ ॥ पश्चादाभर-
णं दद्यात् रत्नराजिविराजितम् ॥ पुनर्वस्त्राणि रम्याणि रत्नछत्रादिकं तथा ॥ ४५ ॥ दर्पणं व्यजनं चारु चामीकरविराजितम् ॥ चामरं पुष्पमालाश्च

वतस्यात्मा नंदीशोगणपाग्रणी: ॥१०॥ नंदिकेश उवाच ॥११॥ शंभो-चंद्रललाटसोम भगवन् विश्वेश विश्वाधिक पूर्णेंदुस्फुर
दास्यया श्नयनापारव्यथां संहर ॥ श्रीमृत्युंजय नंद वेद्य भवतः पादारविंदं सदा ध्येयम चं हरामि सततं त्वल्लिंग
संपूजनात् ॥१२॥ पापं ज्ञानमपामयान् रहितो ध्याये त्वदीयं पदां ह्यायो दुःखमशेष संसृति भयं त्वद्भक्त सं
सेवनात् ॥ त्वत्तोऽन्यामर पूजने च भगवन्नायं ह्युपाय क्रमः ॥ कायं प्राप्य विमुक्त येहि यतते भूयस्त यापेरितः ॥१३॥
नंदिकेश महास्तुत्या नंदितः प्राह तं शिवः ॥ महानंद घनः शंभुः नंदितो लिंगदर्शनात् ॥१४॥ ईश्वर उवाच ॥ गणेंद्र शांकर
श्रेष्ठ गणेशैः परिवारितः ॥ गच्छ वैकुंठ भुवनं समानय हरिं द्रुतं ॥१५॥ देवानां कार्यसिध्यर्थं आशुतं सुयशापते ॥
3 तथेति नत्वा देवेश मोंकार कृत केतनं ॥१६॥ ययौ द्रुतं विमाने न गणेंद्रैः संस्तुतस्तदा ॥ भस्म भूषित दिव्यांगः शोभ
लिंगार्चनैरतः ॥१७॥ नंदीस नंदयल्लोकान् जगाम दौर्वि विष्टपं ॥ महेंद्रेण गणेंद्रोऽपि पूजितो भोजितस्तदा ॥१८॥ १८
पृष्टाच्चानामयं शक्रं शिवपादांबुजार्चकं ॥ पप्रच्छ नंदिकेशस्तं बृहस्पति मते स्थितं ॥१९॥ नंदिकेश उवाच ॥ त्रिविष्टपं
> १० सुखं प्राप्य शिपि विष्णार्चनैरतः ॥ दुरदृष्ट विनाशाय प्रकृष्टं शरणं गतः ॥२०॥ नंदिकेश वचः श्रुत्वा महेंद्रः प्राह सांजलिः ॥

॥ सूत उवाच ॥ इत्थं गीर्वाण वाणीनां श्रुत्वा वागीशसंस्तुतः ॥ उवाच हर्षयन्देवान्छंकरो लोकशंकरः ॥ १ ॥ ईश्वर
उवाच ॥ ॥ स्तुत्यानयाध सुप्रीतो भवतां सुरसत्तमाः ॥ ईप्सितं वो वदंत्वाशु दास्याम्यहमिमे वहि ॥ २ ॥ सदाशिववचः
श्रुत्वा प्रणम्येंद्रमुखाः सुराः ॥ इदमूचुर्वचो हृष्टाः विनयावनताननाः ॥ ३ ॥ देवा ऊचुः ॥ [illegible] नामाध दैत्योस्मा
न बाधते निशं ॥ त्रिविष्टपादुद्राविता स्मो भीषामः कष्ट जीवनैः ॥ ४ ॥ ब्रह्मणः प्रसभं हृत्वा वेदान्सांगान्महेश्वर ॥ त्वयो
पदिष्टान्विश्वेशस शास्ति भुवनत्रयं ॥ ५ ॥ निस्स्वाध्याय वषट्कारो लोकः संप्रति वर्तते ॥ यज्ञभागविहीनास्मोऽह
तस्वर्गा हृतौजसः ॥ ६ ॥ शरणं त्वां प्रपन्नाः स्मः पाहि नः शरणागतान् ॥ पुनः प्रणम्य विश्वेशं भक्त्यातुष्टुवुरीश्वरं ॥ ७ ॥ देवा ऊ
चुः ॥ ॥ जगदुद्भवनाश संस्थिति प्रलयापार गभीर सागरं ॥ भगवंस्तव भक्ति भावना परपारं समुत तुं मिह्ववः ॥ ८ ॥
कनिष्टं वरिष्टं तमाज्येष्ठमीशं गरिष्टं वसिष्ठादि संपूजिताघ्रिं ॥ विशिष्टं सुराणां विशिष्टेषु पूज्यं न तास्मो न तास्मो न तास्मो
न तास्मः ॥ ९ ॥ सूत उवाच ॥ देवान्संपीडितान् ज्ञात्वा सस्मार गणनायकं ॥ नंदिनं नंदितानेक विबुध व्रजसंस्तुतं
॥ १० ॥ स्मृत मात्रः शिवेनात्र प्रणतः संस्थितः पुरः ॥ बध्वांजलिपुटं तूर्णं किं करोमीति शंकरं ॥ ११ ॥ सम्यक् तुष्टा

पं.७ यस्य रूपापरिज्ञानान्मन आत्मेति मन्यते ॥ यस्य रूपापरिज्ञानात्प्राणि-चात्मेति मन्यते ॥

गत्पाति सनातनः ॥ असंगः सर्वभूतेषु निर्विकारो विकारिषु ॥५॥ यं सूक्ष्मबुध्या पश्यंति स्वहृदा वीतरागिणः
॥ यो ध्यानेन जपैर्यज्ञैस्तपसा नाशकेन च ॥६॥ नवेत्ति वेद्यान्यक्षाणि मनोवाचामगोचरः ॥ यस्माद्भूतानि जा-
यंते येन जीवंति तान्यपि ॥७॥ यो ध्यानेन जपैर्यज्ञैस्तपसा ॥ यत्र लीनानि कल्यांते स एकः परमेश्वरः ॥ यस्य
पाणि रनं घ्रिश्च अचक्षुश्चाप्यथाश्रवाः ॥८॥ सोंतिके स हि दूरस्थः सबाह्याभ्यंतरेपि च ॥ स सत्यज्ञानमानं-
दो गुणेहीनश्च निर्गुणः ॥९॥ स स्वतंत्रश्च पूर्णश्च तेन पूर्णमिदं जगत् ॥ स नित्यश्चेतनानां च पतीनां पति
मीश्वरः ॥१०॥ यस्त्वेकः सृजतीशानश्चराचरमिदं जगत् ॥ यथोर्णनाभिस्तंतून्वै सृजते गत्र सतेपि च ॥११॥
यस्य रूपापरिज्ञानात् देहमात्रं प्राणं चात्मेति मन्यते ॥ यस्य रूपापरिज्ञानाद्भूतान्यात्मेति मन्यते ॥१२॥ यस्य रूपापरिज्ञाना
त्सर्वमात्मेति मन्यते ॥ यस्याकाशः शरीरं हि आकाशो नैव वेत्तितं ॥१३॥ यस्य भूमिः स्वरूपं हि तं भूमिर्नैव वेत्ति
हि ॥ यो मनश्चक्षुरादीनां नियंता परमेश्वरः ॥१४॥ यस्य भासा जगद्भाति स शक्रानलवायवः ॥ भीत्या भां-
ति च वांत्येव चेतनानां स चेतनः ॥१५॥ यस्य माया विलसितं जगत्स्थावरजंगमं ॥ स मायी परमेशानस्तस्य मायास्य मि-
दं जगत् ॥१६॥ यो शरीरो ह्यलिंगश्च यमिभिः परिदृश्यते ॥ यस्य विज्ञानमात्रेण सर्वं विज्ञातमेव हि ॥१७॥

ज्ञानमात्मा महद्ब्रह्म ज्ञाते शांतिरनुत्तमा ॥ सएकः परमात्मा हि नेह नानास्ति किंचन॥१८॥ सएकोजालवानी शईशानोभिः सईशते॥एक एव महान् रुद्रः पुरुषो विश्वतोमुखः॥१९॥ तमेकं ज्ञानधात्मानं तस्मान्यत्त दिदं जगत्॥ यज्ज्ञानात् हृदय ग्रंथि भेदनं जायते नृणाम्॥२०॥ यस्यैकत्वं हि विज्ञाय शोकं तरति मानवः॥ सएवज्योतिषां ज्योतिः सएव तपसां तपः॥२१॥ सएकः सर्वभूतेषु बहुधा भाति मायया॥ योजाग्रत्स्व-प्नतुर्याभिः गूढात्मा न प्रकाशते॥२२॥ योदृश्यः सूक्ष्मया बुध्या तत्त्वज्ञानेन केवलं॥ तपसा वेदितव्यः सनान्यथा कर्मकारिभिः॥२३॥ योवेदादौ स्वरः प्रोक्तो वेदांते षु प्रतिष्ठितः॥ यईशानोऽखिलविद्यानां पारदृक् चसनातनः॥२४॥ योभूतसंघेषु प्येपि जगतां ईशो महेश्वरः॥ यस्मात्प्राणो मनोजज्ञे सहि नान्येति किंचन॥२५॥ योज्योतिर्ज्योतिषां देवो विश्वात्मा विश्वतोमुखः॥ योभूमिमत्यतिष्ठत्च यस्माद्ब्रह्माणिजज्ञिरे॥२६॥ यतो ब्रह्मेशविष्णिंद्रा सह देवैश्च जज्ञिरे॥ योब्रह्म ब्रह्मविच्चापि ब्रह्म ब्रह्म समश्नुते॥२७॥ एष ब्रह्मेषविष्णुश्च एष देवो विराजते॥ एष भूतपतिर्देवो एष सर्वविधारणः॥२८॥ एकमेव महादेवं इंद्र मित्रादिभिः सुरैः॥ नामरूपगुणश्चैव मायया मन्यते जनः॥२९॥ इदं जगत्पुरा सृष्ट्वा तस्मिन्प्राविश-

प्र०५० अ०३

श्रीशंकर उवाच॥ श्री गंगासागरं गौरि पुण्यं पापनिवारणम्॥ गंगातरङ्ग संघट्टभिन्न वार्धितर
ङ्गकं॥१॥ तां गंगासागरो दृष्ट्वा तरङ्गावलिभासुरः॥ हसन् फेणगणे नृत्यं समाश्लिष्यान्नवप्रि
यां॥२॥ तरङ्गहस्तै देवेशि गर्जन् कोलाहलारवैः॥ गङ्गाजलाबिलतनुस्तदासौ सागराम्बिके॥ ~~स्नाविष्णवादयो देवाः~~
तत्र सस्नु देवगणास्तथा मुनिगणाः शिवे॥३॥ ब्रह्मविष्ण्वादयो देवाः परं
हर्षमवाप्नुवन्॥४॥ स्नात्वा संतर्प्य च पितॄन् भस्मनोद्धूलयेत्तनुं॥ दत्त्वा दानानि पुण्यानि गा
5 वो भूमिं तिलं धनम्॥५॥ मत्प्रीत्यर्थं महादेवि ब्राह्मणेषु तपस्विषु॥ यत्र गंगासागरस्य संगमोऽस्ति
महेश्वरि॥६॥ तत्र स्नानं कृतं हे तत् फलदं सर्वपापहृत्॥ अन्यत्र विंशत्कृच्छ्राणि पुराभिधः प्रकल्प
यत्॥७॥ तत्रास्ति मे बिल्वबनं नवारुणदलान्वितं॥ कदम्बनिंबपुंसवैर्नीपमन्दारसुन्दरं॥८॥
तनालतिलकोपेतं बकुलोद्दालकेतकं॥ तमालतालहिंतालसालनीलीविराजितम्॥९॥ गं
गातीरे महानीरभूमितर्पितभूरुहाः॥ नवोरुबिल्वशाखाग्रफलभारावनामितम्॥१०॥ पुष्प
सौरभ्यमधुरं गंधमारुतवीजितं। वसन्तमुकुलोत्फुल्लं मल्लीवल्लिविराजितम्॥११॥ केतव॰

शिवरह० ५ १२२

भग० पं० अ० २१

द्यामरजसा गंधीकृतदिगन्तरं ॥ वेणुवेत्रगणच्छन्नं नानाशकुनिनादितम् ॥ १२ ॥ गंगासागरतीरस्थं
वनमेकमभून्मम ॥ तीरसंस्थमहालिङ्गं मम सर्वार्थदायकम् ॥ १३ ॥ तत्र शैववराः सन्ति गंगासा
गरवासिनः ॥ भस्मरुद्राक्षसंपन्नाः पंचाक्षरपरायणाः ॥ १४ ॥ रुद्रलिङ्गार्चनपरा रुद्रं ध्यायजपादराः
॥ तद्बिल्ववनजातैर्बिल्वपत्रैस्तथार्चिते ॥ १५ ॥ सागरेशं महालिङ्गं दृष्ट्वा नत्वा च भक्तितः ॥ बिल्व
पत्रैः समभ्यर्च्य वसंति नियता हि ते ॥ १६ ॥ गंगासागरमासाद्य क्षेत्रमत्यन्तपुण्यदं ॥ सोऽश्वमेधमवा
प्नोति दृष्ट्वा मां सागरेश्वरं ॥ १७ ॥ सागरे चाथ गंगायाः स्नात्वा पुण्यप्रदे शिवे ॥ बिल्वपत्रैः समभ्य
र्च्य स्नाप्य संगमवारिभिः ॥ १८ ॥ तस्मात्कृतगुणं पुण्यं गंगासागरमज्जनं ॥ तत्र संतर्प्य च पितॄन
श्राद्धं दद्याच्च यो नरः ॥ तस्य वंशशतं तृप्ताः पितरः सपितामहाः ॥ एकं कोटिगुणं भोज्यं ब्राह्मणे च
महेश्वरि ॥ २१ ॥ दत्त्वैकां गां दरिद्राय शतगोदानपुण्यभाक् ॥ यो लिङ्गं स्नापयेन्नीरैः गंगासागरसं
वैः ॥ २२ ॥ क्षीरकुम्भशतैः स्नाप्य यत्फलं तच्छताधिकं ॥ तरंगमालाकलितगंगासागरसंगमे ॥ २३ ॥
तत्तरङ्गोत्थवातेन पापभंगः प्रजायते ॥ तत्र स्नात्वा तु मुनयो ग्रहणे चन्द्रसूर्ययोः ॥ २४ ॥ पापसं

शरीर० ॥१६॥ शिवलिङ्गे नीरधारा न मया कल्पिता ततः ॥ नारी शरीर० ॥१७॥ न धूपदीपौ दत्तौ च लिङ्गरूपाय शम्भवे नारी शरीर० ॥१८॥ नैवेद्यन्न मया दत्तम्प्रा-

न्तः शर्वाय सादरं ॥ नारी शरीर० ॥१९॥ प्रायेण प्रणतः शम्भुः प्रदक्षिण पुरःसरं ॥ नारी शरीर० ॥२०॥ न ध्यातः प्रायशः शम्भुः गणनायक वन्दितः ॥ नारी
शरीर० ॥२१॥ प्रायः शाम्भव पूजाद्यन्न कृतानेन सत्वरम् ॥ नारी शरीर० ॥२२॥ महेशार्चन विघ्नोऽयम् कथमद्य समागतः ॥ नारी शरीर० ॥२३॥ प्रायः शिव कथा-
प्यद्य न श्रुता भक्ति पूर्वकम् ॥ नारी शरीर० ॥२४॥ नारी शरीररूपेण किं विधेयमतः परम् ॥ करेराकर्षयन्त्येताः सर्वास्तावन्ममेत्ययम् ॥२५॥ एतत्सङ्गे ममोत्सङ्ग
तुङ्गङ्गारनिभप्रभाः ॥ अहो किमिदमाश्चर्यं सृष्टमीशत्वयाधुना ॥२६॥ कोऽयं सृष्टिरियं प्रायो नाङ्गनासृष्टिरीदृशा ॥ एतासां मारधीर्जाता मयि सुन्दर विग्रहे ॥२७॥
नमो मारदशामेवं प्रापयामेय शङ्कर ॥ निवारय महत्कष्टं इदमेतादृशं प्रभो ॥२८॥ विघ्नः कोऽयं समुत्पन्नो नारीरूपेण शङ्कर ॥ नारीगणश्चेत्येतस्य न स्त्रजा जल्प-
ज्जनम् ॥२९॥ किमतो विघ्नएवायं नारीरूपमुपागतः ॥ शिवार्चनेन विज्ञात ममितं फलमित्यतः ॥३०॥ अस्य विघ्नः समुत्पन्नः स विघ्नो हि महत्फलम् ॥ अविघ्ना-
नि भवन्त्येव बहून्यल्प फलानि तु ॥३१॥ महाफलानि धर्माणि सविघ्नानीति निश्चयः ॥ अतः परमुपागन्तव्यम् किं कर्तव्यमतः परम् ॥३२॥ एतद्धि आपहर
ण कर्तुं शक्तिस्तु कस्य वा ॥ शङ्करेणैव चेदिदं विघ्नपरम्परा तदा [illegible] निवारकः कः स्यात्त सृष्टिः प्रबला खलु ॥ आपत्काल इवाभाति सोऽयमुद्वेगसाधनम् ॥३४
[illegible] विघ्नो न जातः सर्वथा खलु ॥ त्यक्त मौञ्जी नाङ्ग सङ्ग भीत्या गृहादिकम् ॥३५॥ पुनरप्यागतः सोऽयमन्तरायस्तदात्मकः ॥ एवं व्याकुलचित्तस्य तस्य
[illegible] ॥३६॥ विकारो नाभवे देहे काष्ठस्येव महात्मनः ॥ ततः परं विवस्त्रं कृत्वा रुवं कुर्वेच्छया ॥३७॥ नग्ना यतास्त मारुह्य स्कन्धे यौनन्नृतुर्नृप ॥ तथापि निर्वि-

6

हराणि॥तैरस्त्रलिङ्गानि विशेषतोऽद्य काम्यं मया पूजनमंत्र गाहि॥१०॥आयुःक्षीयमिदं प्रतिक्षणमहो मृत्युःशिरस्त्यग्रतस्थं मे॥सर्व्वं नेन वृतावसंच
गयनानां नायाति चायुर्गतम्॥११॥ आयुर्नार्चितस्य नापि सन्नारागितः शैलजानन्दोजां नेत्यं कुर्यातिवदां भोजं ध्यानं वा मया॥आयुः शङ्कर पूजया
यदि भवेद्दीर्घं तदा तत्परं धन्यं धन्यतमम् च सु यद्यपि भवेद्भ्रूपर्धं तदाकुत्सितम्॥१३॥तस्मादायुर्महेशपूजनमनेनैवायुषा सर्वदा कर्तव्यम् तद्भुमा
सहाय चरणाम्भोज प्रसूनाय मे॥९३॥ इतिश्रीशिवरहस्ये हरख्येततीयांशे उत्तरार्द्धे यज्ञवल्क्यजनकसम्वादोनाम प्रथमोऽध्यायः॥१॥श्रीकाशीवि
श्वनेश्वरार्पणमस्तु॥ याज्ञवल्क्य उवाच॥ इति तस्मिन्वदत्येव नारीरत्नं सरोजनः॥ राराजीव गतेत्याशु शिवालयमुपागतः॥१॥तन्दृष्ट्वा तु तो भूपं मदालापरवियत्न
मदनोन्मादसंवीतः स तु रन्तुमनो दधे॥४॥ततः कामातुरा राजंस्तमाकृष्य मदावृता अयं ममेति प्रजुते ममेत्यन्या ममेति च॥३॥ स्वयं सर्वो जनः सर्वहृत्भाव-
स्य स्थितस्तदा॥तदा राजापि निर्विण्णस्तरुणीकरसम्वृतः॥५॥कदाचिदालिंगयन्तं भूपं तुष्टा भवति काचन॥तां दूरीकृत्य काप्यन्या त्वालिंग्यापि तिष्ठ-
ति॥६॥ निराकृता सा कयापि सा कयापि निराकृता॥ एवं तदंग सङ्गेन ताः सर्वा मदविह्वलाः॥ मदनोऽयं समागत्य वने क्रीडति सादरं॥नायन्त्याज्य इति प्राहु
स्तरुण्यस्ताः सहस्रशः॥७॥स राजा कष्टमेतावत्कथमागतमित्यपि चिन्तया व्याकुलस्तत्र चिन्तया किंतया तथा॥८॥अपराधः कृतः को वा मदनारे पुरा मया॥नारी
शरीररूपोऽयमायात्यङ्गारसागरः॥१०॥ मयाकस्य मुखं दृष्टं अशौचस्यास्य सत्वरं॥नारीशरीररूपोऽयमायात्यङ्गारसागरः॥११॥भस्मोद्धूलं प्रायः प्रातर्नकृ-
तमित्यतः॥ नारीशरीररूपो०॥१२॥ त्रिपुण्ड्रधारणं प्रायः प्रातर्न कृतमित्यतः नारीशरीर०॥१४॥ बिल्वपत्रैर्महादेवः प्रातर्नाभ्यर्चितस्ततः॥नारी-